संक्षेपतो गणितजाड्यविनाशनानि
भद्राणि भद्रमतिदानि समीरितानि ।
नोक्तानि तानि घनवर्गपदात्मकानि
ग्रन्थप्रसारणभयाद् बहुलक्रियाणि ॥५५॥

आसीत् सौजन्यदुग्धाम्बुधिरवनिसुर-
श्रेणिमुख्यो जगत्यां
प्रख्यः श्रीकण्ठपादद्वयनिहितमनाः
शारदाया निवासः ।
श्रौतस्मार्तार्थवेत्ता सकलगुणनिधिः
शिल्पविद्याप्रगल्भः
शास्त्रे शस्त्रे च तर्के प्रचुरतरगतिः
श्रीनृसिंहो नृसिंहः ॥ १ ॥

तत्सूनुरस्ति गणितार्णवकर्णधारः
श्रीशारदाप्रचुरलब्धवरप्रसादः ।
नारायणः पृथुयशा गणितस्य पाटीं
श्रीकौमुदीमिति मुदे गुणिनां प्रचक्रे ॥ २ ॥

यावत् सप्तकुलाचलाः क्षितितले

यावच्चतुःसागरा

यावत् सूर्यमुखा ग्रहाश्च गगने

यावद् ध्रुवस्तारकाः ।

स्थेयात् तावदियं सदोदितवती

श्रीकौमुदी कौमुदी-

पूरस्वच्छयशःप्रवाहसुभगा

नारायणेन्दोः स्तुता ॥ ३ ॥

नारायणाननसुधाकरमण्डलोत्थां

च तुर्यसूक्तिरचनामृतबिन्दुवृन्दाम् ।

प्रीत्यैव सज्जनचकोरगणाः पिबन्तु

श्रीकौमुदीमुदितहृत्कुमुदः सदैताम् ॥ ४ ॥

गजनगरविमित १२७८ शाके

दुर्मुखवर्षे च बाहुले मासि ।

धातृतिथौ कृष्णदले

गुरौ समाप्तिगतं गणितम् ॥ ५ ॥

इति श्रीसकलकलानिधिश्रीमन्नृसिंहनन्दनगणितविद्याचतुराननारायणपण्डितविरचितायां गणितपाट्यां कौमुद्याख्यायां भद्रगणितं नाम चतुर्दशो व्यवहारः ।

समाप्तेयं गणितकौमुदी ।

---